हरिः ॐ तत्सत्

श्रीशः पायात्

# भूमिका

वन्देऽरण्यमिवानन्त-विद्यान् शान्तिसुखार्णवान् ।
ततब्रह्मैक्यविज्ञानान्, विद्यारण्यमुनीश्वरान् ॥ १ ॥

अनाद्यनिर्वचनीयाज्ञानप्रसूतदुर्वासनावासितस्वान्ताः—आध्यात्मिकादि-विविधदुःखभाजो मलिनमतयो मानवाः मातापितृसहस्रेभ्योऽप्यधिकतरवात्सल्यशालिभिर्विमलमतिभिस्तत्त्वदर्शिभिर्महापुरुषैः श्रौतस्मार्तादिवचनजातैस्तद्धितमुपदिशद्भिर्भृशमन्वग्राहिषत । त इमे मृगतृष्णिकोदकपिपासुप्रवृत्तिनिमित्तवत्, अयथाभूतवस्तुभ्रान्तिविज्ञानेन समुद्भूतैः रागादिभिर्दोषैः शुभाशुभकर्मसु प्रवर्तमानास्तासु तासु विविधयोनिषु जन्मानि लभमानास्तत्कार्यं विविधं दुःखमनुभवन्तः संप्रत्यप्युपलभ्यन्ते । यदाह गीतासु भगवानप्यच्युतः—'पुनर्जन्म दुःखालयमशाश्वतम्' (८।१५) 'ये हि संस्पर्शजा भोगा दुःखयोनय एव ते । आद्यन्तवन्तः कौन्तेय!' (५।२२) 'अनित्यमसुखं लोकं' (९।३३) इति । पुनर्जन्म दुःखानामाध्यात्मिकादीनामालयं—आश्रय एवास्ति । मूढदृष्ट्या किञ्चित्सुखालयत्वेऽपि अशाश्वतं-नश्वरं-तुच्छमेव तत् । विषयेन्द्रियसम्पर्कजाः, ये इह वा परत्र वा क्षुद्रसुखानुभवात्मका भोगाः सन्ति, ते सर्वेऽपि आद्यन्तवन्तः-अस्थिराः-आदिः-विषयेन्द्रियसम्पर्कः, अन्तस्तद्वियोगः, पूर्वं पश्चादप्यसन्तो मध्यैकक्षणमात्रवर्तिनः, तदाऽपि दुःखस्यैव योनयः=कारणभूताः, अविद्याकृतत्वात्, दृश्यन्ते ह्याध्यात्मिकादीनि दुःखानि तन्निमित्तान्येव । वर्तमानकालेऽपि रागद्वेषस्पर्धादिकरम्बितत्वात् । जाते च पुत्रे लब्धे च धनादौ यत्स्वल्पं सुखं रक्षणादिचिन्तासन्तापसमन्वितमपि, तत् तस्मिन्नष्टे नश्यति, दुःखं च महत्प्रयच्छतीति लोके प्रसिद्धमपि । तदिदमुक्तं—विष्णुपुराणे—'यावतः कुरुते जन्तुः सम्बन्धान्मनसः प्रियान् । तावन्तोऽस्य निखन्यन्ते हृदये

शोकशङ्कवः ॥' ( १।१७।६६ ) इति । सत्येवं न संसारे सुखस्य गन्धमात्रमप्यस्तीति विज्ञाय विषयमृगतृष्णिकाया इन्द्रियाणि मनश्च निवर्तयेत् ।

## ब्रह्मात्मैक्यज्ञानस्य फलम् ।

अत एव तेषां किल सकलदुःखनिवृत्तिः तत्परममूलमिथ्याज्ञाननिवृत्तिमन्तरेण कथमपि न सम्भवतीति संप्रधार्य तत्त्वदर्शिनो महात्मानः—युष्माभिः—हितं तत्त्वज्ञानं परमसुखबीजमेव प्रेप्सितव्यं, अहितञ्च मिथ्याज्ञानं निखिलदुःखकारणं जिहासितव्यमिति—समुपदिशन्ति । तथैव भूयांस आगमा अपि—'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ।' ( शु० य० सं० ३१।१८ ) 'ज्ञात्वा देवं सर्वपाशापहानिः' ( श्वे० १।११ ) 'तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ।' ( श्वे० ६।२० ) 'ज्ञानादेव तु कैवल्यम्' 'ऋते ज्ञातान्न मुक्तिः ।' 'सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ।' ( गी० ४।३६ ) 'नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ।' ( ४।३८ ) 'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन ! ।' ( गी० ४।३७ ) इत्याद्याः । 'मृत्यु'पदेनात्राविद्यातमः, तत्कार्यभूतो मिथ्यानामरूपात्मकद्वैतप्रपञ्चाख्यः संसार एव चोच्यते । 'मृत्युर्वा असत् सदमृतं', 'मृत्युर्वै तमो ज्योतिरमृतम्' ( बृ० १।३।२८ ) इति शतपथब्राह्मणवचनप्रामाण्यात् । तमेव-महान्तं पुरुषमेकं सर्वात्मानमेव विदित्वा न त्वन्यम् । 'तमेवैकं जानथ आत्मानम्' ( मुं० २।२५ ) इति अन्ययोगव्यवच्छेदार्थकावधारणसहितैकपदघटितात् श्रुत्यन्तरादपि । अत्र किल पुरुषज्ञानात् जीवात्मगताविद्याद्यनर्थबन्धनिवृत्तिं बोधयन्ती श्रुतिः—'यद्विषयकमज्ञानं तद्विषयकज्ञानेनैव निवर्त्यम्' इति ज्ञानाज्ञानयोः समानविषयत्वनियमेन-अन्यज्ञानादन्यविषयकाज्ञाननिवृत्तेरयोगात् जीवात्मपरपुरुषयोरैक्यमपि, ज्ञाननिवर्त्यस्यास्य 'मृत्यु'पदबोध्यस्याज्ञानतत्कार्यस्यार्थतो मिथ्यात्वमपि च सूचयति । ज्ञानेन सदृशं-तुल्यं पवित्रं-पावनं परिशुद्धिकरं परमपुरुषार्थौपयिकं, इह-व्यवहारभूमौ नान्यदस्ति । यद्वा पवित्रं-पविः—वज्रं तद्वत् लक्षणया महाभयहेतुभूतमज्ञानं-पविः, तस्मात् त्रायते-तन्नाशेन रक्षति इति पवित्रं ज्ञानं अज्ञानभयत्राणकरम् । अनेन सम्यग्ज्ञानादेवायं मानवो निखिलभयदुःखादिभ्यः क्षिप्रमेव विमुक्तो भवतीति सूचितम् । ज्ञानमेव प्लवं-तरणसाधनमुडुपं कृत्वा वृजिनार्णवं दुस्तरं संतरिष्यसि-अनायासेन सकलपापविनिर्मुक्तो भविष्यसि । पुण्यमपीह बन्धप्रयोजकत्वादत्र पापमुच्यते । तथा

चात्र ब्रह्मात्मैक्यज्ञानस्याविद्यादिसर्वपापनिवर्तकत्वेन निरतिशयानन्दसमर्पकत्वेन च स्तुत्यं माहात्म्यं प्रकटितम्।

## साङ्ख्य-नैयायिकाभिमतनानात्मवादखण्डनम्।

अत्र केचन सांख्यन्यायादिमतानुयायिनः—'तत्त्वज्ञानान्निःश्रेयसाधिगमः' (न्या० सू० १।१।१) 'व्यवस्थातो नाना' (कणाद वै० सू० आ० ३।२०) 'जन्मादिव्यवस्थातः पुरुषबहुत्वम्' (सां० सू० १।१५०) इत्यादिभिः सूत्रैः— पृथिव्याद्यनात्मपदार्थेभ्यो भिन्नतया ज्ञातस्यात्मनो ज्ञानादेव निःश्रेयसस्य— अपवर्गाख्यस्याधिगमः—लाभो भवति। स चात्मा नैकोऽपि त्वस्ति नाना; जन्मादिव्यवस्थातः। यदि सर्वशरीरेष्वेक एवात्माऽभ्युपेयेत, तदा एकस्मिन् जायमाने म्रियमाणे वा सुखिनि दुःखिनि वा बद्धे मुक्ते वा नेतरे जन्मादिभाजो भवन्तीति व्यवस्था नोपपद्येत। तस्मादात्मनो नानात्वमेवाङ्गीकार्यमिति—वदन्ति।

अत्राभिदध्महे—यावत् किञ्चित् जन्म मरणं सुखं दुःखं बन्धो मोक्षश्च तत्सर्वं शरीरेन्द्रियान्तःकरणतदाभाससम्बन्धि, नत्वात्मनः। स पुनरेतान् शरीरादीन् अनाद्यविद्यावासनावशात् आत्मत्वेनाभिप्रतीतिवान् सन् तद्गतेन जन्ममरणसुखदुःखादिना तद्वन्तमात्मानमनुमन्यमानोऽनुतप्यते। यदा त्वयमात्मानं देहादिभ्योऽसज्जडदुःखेभ्यो विविक्तमुदासीनं सच्चिदानन्दमद्वैतमनुभवति। अथास्य शरीरवतोऽप्यशरीरस्य न देहादिधर्मजन्ममरणसुखदुःखादिप्रसङ्गोऽस्तीति-नानुतप्यते। केवलमयं निजे स्वप्रकाशचैतन्यानन्दघनेऽद्वैतस्वरूपे व्यवस्थितः सन् लोकोत्तरमहामोदसाम्राज्यमनुभवति। अयमेवार्थः— 'आत्मानं चेद्विजानीयात् अयमस्मीति पूरुषः। किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्॥' (बृ० ४।४।१२) इत्यस्याः श्रुतेरभिप्रायं सप्तमे तृप्तिदीपप्रकरणे विस्तरतः सम्यक् विचारयद्भिः श्रीलविद्यारण्यगुरुभिः सुस्पष्टं निरूपितः।

यदुक्तं-असत्यात्मभेदे सुखदुःखादिव्यवस्था न सिद्ध्यतीति,-तन्न; तस्याः कर्मैकनिबन्धनत्वात्, एकस्मिन्नेव देहे कर्मभेदेन सुखदुःखादिवैचित्र्यदर्शनात्। सुखदुःखयोः पुण्यपापकार्यत्वेन तद्भेदात्, भोक्तॄणां चिदाभासानां भेदाच्च सत्यप्यात्मैकत्वे सुखदुःखादिव्यवस्था उपपत्स्यते। एतेनेदमपि—

यद्यात्मैक्यं सर्वशरीरेषु स्यात्, तदैकेनैव देवदत्तेन सर्वेषां प्राणिनां सुखदुःखादीनामनुसन्धानं स्यादिति निरस्तम्; निरुपाधिकस्यात्मनोऽभेदेऽपि औपाधिकानां जीवानां भेदेनाननुसंधानोपपत्तेः। एकस्यैव जीवस्य जन्मभेदे तत्तद्देहतादात्म्यविभ्रमविच्छेदे जन्मान्तरीयसुखदुःखाद्यननुसन्धानदर्शनाच्च यथा विभोरपि महाकाशस्य शब्दसंभूतिहेतोः सर्वत्र भेर्यादिभिः संयोगे सत्यपि यत्र यत्र परिच्छिन्नप्रदेशे भेर्यादिस्ताड्यते, तत्र तत्रैव शब्दोत्पत्तिः, न तु सर्वत्र। तद्देशभागसम्बद्धे परिच्छिन्ने कर्णपुट एव नादोपलम्भः, भागान्तरवर्तिनि तदसम्बद्धे कर्णपुटे न नादोपलम्भः। तथैवैकस्यात्मनः परिपूर्णस्य महतोऽपि यत्र यत्र यद्यद्बुद्ध्याद्युपाधिसम्बन्धस्तत्र तत्रैव सुखदुःखाद्युपलम्भसम्भवो नान्यत्र इति। अत एव बन्धमुक्त्यादिव्यवस्थाऽपि नात्मनः पारमार्थिकभेदसाधनाय प्रभवति; तत्तदुपाध्युपगमापगमाभ्यामेव व्यवस्थोपपत्तेः। अपि चात्मनामनेकत्वं विभुत्वञ्चाभ्युपगच्छतां सांख्यनैयायिकादीनां पक्ष एव पूर्वोक्ताः सुखदुःखादिसांकर्यलक्षणा दोषाः सम्भवन्ति। यतः—सर्वेषां विभूनामात्मनामन्योऽन्येषामन्योऽन्यमनोबुद्ध्यादिभिः संयोगस्य संभवात् सुखदुःखादिबन्धमोक्षादीनां साङ्कर्यं प्रसज्यत एव। अपि च भोः! विभुत्वानेकत्वयोः परस्परविरोधात्—आत्मनां विभुत्वमनेकत्वञ्च साक्षाच्चतुर्मुखेन ब्रह्मणाऽपि निर्वोढुं न शक्यते। अतस्त्वया श्रुतिसिद्धमात्मैकत्वमेवाभ्युपेयम्।

## विशिष्टाद्वैत्याद्यभिमताण्वाद्यनेकात्मवादखण्डनम्।

एतेन-परिच्छिन्नाः अण्वादिरूपाश्चिद्रूपा अनेके आत्मानः—इति विशिष्टाद्वैत्यादीनामपि यः पक्षः सोऽपि निरस्तः; बहुश्रुतिस्मृतिपुराणयुक्तिविरोधात्। तथाहि—'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म' (बृ० ४।४।२५) 'एकस्तथा सर्वभूतान्तरात्मा' (क० उ० २।५।१०) 'एको देवः सर्वभूतेषु गूढः' (श्वे० उ० ६।११) 'एकः सन् बहुधा विचचार' (चित्युप० ११।१) 'एक एव हि भूतात्मा' (ब्र० बिं० १२) 'तेनेदं पूर्णं पुरुषेण सर्वम्'

१ महत्त्वमत्राणुत्वस्य त्रिविधपरिच्छेदस्य च विरोधि सर्वव्याप्त्यनुरूपं स्वरूपविशेषम्; तत्रैव महच्छब्दस्यार्थविशेषलाभोपपत्तेः। अत एवात्मशब्दसामानाधिकरण्यान्न साङ्ख्यीयं महतत्त्वमपि गृह्यते; तस्य जडत्वात्।

( श्वे० उ० ३।९ ) 'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानम्' ( कठ० उ० १।२।२१ ) 'आकाशवत् सर्वगतश्च नित्यः' इत्यादिश्रुतिभिः, 'नित्यः सर्वगतः स्थाणुः' ( गी० २।२४ ) 'अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्' ( गी० २।१७ ) 'अविभक्तं विभक्तेषु' ( गी० २।१७ ) 'सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।' ( मनु० स्मृ० १२।९१ ) 'नित्यः सर्वगतोऽप्यात्मा कूटस्थो दोषवर्जितः । एकः सन् भिद्यते भ्रान्त्या मायया न स्वरूपतः ॥' ( जाबा० द० १०।२ ) इत्यादिस्मृतिभिः—'आत्मा नित्योऽव्ययः शुद्धः एकः क्षेत्रज्ञ आश्रयः । अविक्रियः स्वदृग्हेतुर्व्यापकोऽसंग्यनावृतः ॥ एतैर्द्वादशभिर्विद्वान् आत्मनो लक्षणैः परैः । अहं-ममेत्यसद्भावं देहादौ मोहजं त्यजेत् ॥' ( श्रीमद्भाग० ७।७।१९–२० ) 'सोऽहं स च त्वं स च सर्वमेतत् आत्मस्वरूपं त्यज भेदमोहम् ।' ( वि० पु० २।१६।२३ ) इत्यादिपुराणैश्च आत्मा सर्वशरीरेषु एक एव भवितुमर्हति, पूर्णत्वात् घटादिष्वाकाशवत् । आत्मा एक एव भवति, निष्कलत्वात् सर्वसाक्षित्वात् सर्वत्राहम्प्रत्ययार्थत्वात् सत्त्वचित्त्वसुखत्वादिसमानलक्षणवत्त्वात् इत्येवमादियुक्तिभिश्चात्मनः पूर्णताऽपरपर्यायं विभुत्वमेवावध्रियते । तस्मात्—गङ्गाह्रदनिमग्नस्य युगपत्सर्वाङ्गीणशैत्योपलम्भाभावप्रसङ्गात् नात्मनोऽणुत्वम्, सावयवत्वोपचयापचयत्वानित्यत्वादिदोषप्रसङ्गाच्च नात्मनो देहपरिमितमध्यमपरिमाणत्वञ्च मन्तव्यम् । परिशेषात् विभुत्वमेव निश्चेतव्यम् ।

अपि च—'तत्सृष्ट्वा तदेवानुप्राविशत्' ( तै० २।६ ) इत्यादिश्रुत्या परब्रह्मण एव जीवात्मना प्रवेशश्रवणात्, ब्रह्मात्मनोरभेदोपदेशाच्च नास्त्यात्मभेदः । अत एव यावत् परं ब्रह्म, तावानेव जीवात्मा भवितुमर्हति । ब्रह्मणो विभुत्वं निश्चितं चेत्तदा तदभिन्नस्य जीवात्मनोऽपि । 'अणोरणीयान्' ( कठ० उ० २।१।१० ) इत्याद्या श्रुतिस्तु 'महतो महीयान्' ( कठ० उ० २।१।२० ) इति वाक्यशेषात् 'महानजः' ( बृ० ४।४।१२ ) इत्यादिश्रुत्यन्तराच्च दुर्लक्ष्यत्वसूक्ष्मतमत्वमात्रपरा नाणुत्वपरा । न च 'एषोऽणुरात्मा' ( मु० उ० ३।१।९ ) 'बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥' ( श्वे० उ० ५।९ ) इत्यादिश्रुत्या जीवात्माऽणुः सिध्यतीति वाच्यम्; यतस्तत्र हि बुद्ध्याद्युपाधिप्रयुक्तस्यौपचारिकस्याणुत्वस्य, पारमार्थिकस्यानन्त्यस्य च प्रतिपादितत्वात् । 'बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो

ह्यवरोऽपि दृष्टः।' ( श्वे० उ० ६।८ ) इति श्रुत्या बुद्धिगुणेन-मध्यमपरिमाणेनाराग्रमात्रत्वस्य, आत्मगुणेन-अपरिच्छिन्नविभुत्वेन-अवरत्वस्य-'नास्ति वरो महान् यतः सोऽसौ अवरः' इति व्युत्पत्तिगम्यस्य स्वाभाविकसर्वमहत्तरत्वस्य प्रतिपादितत्वाच्चात्मनो नाणुत्वसिद्धिः। 'एषोऽणुरात्मा' इत्यत्रापि परस्यैवात्मनश्चक्षुराद्यनवग्राह्यत्वेन ज्ञानप्रसादगम्यत्वेन च प्रकृतत्वाद्धेतोर्न जीवात्मनोऽणुपरिमाणत्वमुपदिश्यते— इति सर्वमनवद्यम्।

अत एवात्र श्रीविद्यारण्यस्वामिभिः—प्रथमे तत्त्वविवेकप्रकरण एव आत्मन एकत्वविभुत्वादिकं समर्थयितुं-संविदः स्वाभाविकभेदशून्यत्वापरपर्यायमेकत्वं नित्यत्वं स्वप्रकाशत्वञ्च युक्तिभिरपि निरूपितम्। सा च संवित् सद्रूप आत्मैव। 'सत्संवित्पदे अभिन्नार्थवृत्तिनी तुल्यार्थवृत्तित्वात्, घटकलशादिवत्, इत्यनुमानेनापि सत्संविदोः एकत्वं सिध्यति। न चासिद्धिः; 'घटः सन्, पटः सन्, संवित् सती, घटो भासते, पटो भासते, संविद् भासते'. इत्यनुभवात्। एवमपि प्रवृत्तिनिमित्तभेदेन सत्यज्ञानपदापर्यायत्वमप्याचार्यैः प्रदर्शितम्। तस्य न्यायमतमनुसृत्य संविदाश्रयत्वस्य वस्तुतोऽसंविद्रूपत्वस्य चाभ्युपगमे जडोऽस्मीति स्वात्मभानप्रसङ्गात्। न चैतादृशं कस्यचित् मूढस्यापि स्वात्मभानं भवति, तस्मात् चिद्रूप एवात्मा सिध्यति। एवं तस्य शून्यमतमनुसृत्यासद्रूपत्वाभ्युपगमे सर्वेषामहं नास्मीति भानं भवेत्, परन्तु सामान्यबुद्धिकोऽर्भकोऽपि केनचित्पृष्टः— किं त्वं नासीति, तदुत्तररूपेण नास्मीति न ब्रवीति। किन्तु सर्वदाऽहमस्मि, अहमस्मीति स्वात्मनोऽस्तित्वमभिजानन् स्फुटमभिवदति, तस्मात् विनिश्चीयते-आत्माऽस्ति चिद्रूपवत् सद्रूपोऽपि। तथैव—'अस्तीत्येवोपलब्धव्य इत्येषा याजुषी श्रुतिः। साक्षिविभुश्चिदात्मानं सत्तैकरसमाह नः॥ सत्ता हि सर्वभावानामधिष्ठानात्मिका स्मृता। एका विभ्वी स्वयंज्योतिः पूर्णाऽभिन्ना चिदात्मनः॥' इति। एवमात्मनो निरतिशयप्रेमास्पदत्वेन निरतिशयसुखरूपत्वमपि वर्णितम्। अत एव एतादृश आत्मा सच्चिदादिसमानलक्षणयोगात् ब्रह्मणोऽभिन्न एव, महनीयाभिरतिधन्याभिः तत्त्वमस्यादिमहावाक्यश्रुतिभिः प्रतिपाद्यते।

## माध्वाद्यभिमतद्वैतवादनिरासपूर्वकं जीवब्रह्मैक्यवादप्रतिपादनम्।

ननु—भो! 'तत्त्वमसि' (छां० ६।८।७) इति महावाक्येन कथं जीवब्रह्मणोरभेद एव प्रतिपाद्यते? प्रकारान्तरेण तयोर्भेदस्य तेन प्रतिपादन-

सम्भवात्। तथा हि—'तत्त्वमसि' इत्यत्र चतुर्थ्याः 'सुपां सुलुक्' (पा० ७।१।३९) इति पाणिनीयसूत्रेण लोपं कृत्वा, स्वादेशं वा कृत्वा विभक्तिव्यत्ययं विधाय वा तस्मै-परमेश्वराय त्वं समर्पणीयोऽसीत्यर्थः स्वीकार्यः। पञ्चम्या वा स्वादेशलोपादीनामन्यतमं स्वीकृत्य तस्माद्विश्वकारणाद्भगवतस्त्वमुत्पन्नोऽसीत्यर्थोऽभ्युपेयः। षष्ठ्या वा तदन्यतमं स्वीकृत्य तस्य विश्वस्वामिनः परमात्मनस्त्वं दासोऽसि—तत्स्वामिकोऽसीत्यर्थोऽङ्गीकार्यः। सप्तम्या वा तदन्यतममङ्गीकृत्य तस्मिन् विश्वाधिष्ठाने ब्रह्मणि त्वमाश्रितोऽसीत्यर्थो ग्राह्यः। अथवा 'स आत्मा तत्त्वमसि श्वेतकेतो!' इत्युद्दालकस्य स्वपुत्रं श्वेतकेतुं प्रत्युपदेशपरे वाक्ये 'आत्मा अतत् त्वमसि' इति पदच्छेदः कार्यः। अतदित्यत्र च नञर्थो भेदः। तथा च यः स्वातन्त्र्यादिगुणोपेतः स एव परमात्मा, त्वन्तु अतत् तस्मात्परमात्मनो भिन्नः परतन्त्रो जीवोऽसीत्यर्थं उपेयः। एवं 'तत्त्वमसि' महावाक्येन जीवेश्वरयोर्भेद एव सिध्यति। सत्येवं भवदाचार्यैः कथमभेद एवार्थोऽत्र वर्ण्यते ?।

## महावाक्यानि द्वैतप्रतिपादनपराणीतिमतखण्डनम्।

इति चेन्मैवम्। अपरिशीलितोपनिषदां परदर्शितदर्शिनामविवेकिनामेवैतादृशो व्यामोहोऽत्र जायते; तन्निराकरणार्थमत्रोच्यते—'अनन्यलभ्यो हि शास्त्रार्थः' इतिन्यायेन शास्त्रादतिरिक्तेन प्रमाणेन यन्न लभ्यते, तत्रैवास्ति शास्त्रस्य तात्पर्यम्। जीवेश्वरयोर्भेदस्य प्रत्यक्षादिप्रमाणेभ्यः सिद्धत्वेन पुनस्तस्यैव तात्पर्यतः प्रतिपादने कथमपि नोत्साहं करोति शास्त्रम्। अपि च 'तत्त्वमसि'महावाक्यस्य द्वैतवादिविहितः पूर्वोक्तो भेदार्थः तात्पर्यभूताद्वैतार्थबोधकोपक्रमोपसंहारादिगर्भित-महाप्रकरण-विरुद्धत्वात्-अप्रामाणिकतया कथमपि नोपादेयः। तथाहि—महाप्रकरणस्य तस्योपक्रमे हि-श्वेतकेतुं स्वपुत्रं गुरुकुलात् सर्वान् वेदानधीत्य गृहमागतं स्तब्धं मानिनं प्रति पितुरुद्दालकस्य तत्स्तब्धताद्यपनोदनार्थोऽयं एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपबृंहितः प्रश्नः—'उत तमादेशमप्राक्ष्यः' इत्यनन्यलभ्याद्वैततत्त्वविषयक एव स्पष्टमवगम्यते। जीवब्रह्मणोः जगद्ब्रह्मणोश्च वास्तविकभेदस्वीकारे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा कथमपि न संगच्छेत। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा च मृदादिदृष्टान्तमनुरुध्य विवर्ताभिप्रायेणैव समर्थनीया, न तु परिणामाभिप्रायेण। न

च मृदः शरावादयो भिद्यन्ते, न चाभिन्नाः, न वा भिन्नाभिन्नाः, किन्त्वनिर्वचनीया एव । तथा च-उपादानस्वरूपे ज्ञाते तदात्मनोपादेयं ज्ञातं भवतीत्येवमभिप्रायबोधनाय मृदादिदृष्टान्तप्रदर्शनमस्ति, न तु परिणामाभिप्रायकमिति बोध्यम् । इत्थेवं दार्ष्टान्तिकं ब्रह्माऽप्यविकृतं समर्थितं भवति । न खलु नित्यस्य निष्कलस्य ब्रह्मणः सर्वात्मनैकदेशेन वा परिणामः सम्भवति; नित्यत्वादविकृतत्वादनेकदेशत्वाच्च । यदाहुः संक्षेपशारीरकाचार्याः सर्वज्ञात्ममुनयः—'कृपणधीः परिणाममुदीक्षते, क्षपितकल्मषधीस्तु विवर्तताम् ।' इति । न चैकविज्ञानेन तत्सदृशं तदधीनञ्च सर्वं ज्ञायते, इत्यर्थः प्रतिज्ञायाः स्यादिति वाच्यम्; तथा नियमाभावेन तादृशस्यार्थस्यासंगतत्वात् । न हि गोज्ञाने तत्सदृशस्य गवयादेः, राजज्ञाने च तदधीनस्य प्रजादेर्नियतं ज्ञानं सम्भवति । तस्मादनियतज्ञाने तत्सदृशादेः कल्पनं प्रामादिकमेव । तथा च—अश्रुतं-अमतं-अविज्ञातं वियदादिकं सर्वं चराचरं जगत् तत्त्वतो यदभिन्न-श्रुत-मत-विज्ञात-ब्रह्मव्यतिरिक्तस्वीयतात्त्विकरूपशून्यम्, एकं ब्रह्मतत्त्वं सर्वस्याधिष्ठानमित्यर्थ एव प्रतिज्ञातः । विवर्तवादेऽधिष्ठानज्ञानेनाऽऽरोपितस्य तत्त्वतो ज्ञातत्वं संप्रतिपन्नम् । रज्ज्वां ज्ञातायां भुजङ्गतत्त्वं ज्ञातं भवत्येव, सा हि तस्य तत्त्वम् । रज्जुसाक्षात्कारानन्तरं यत्प्राक् भुजङ्गतत्त्वमभात् सा रज्जुरिति प्रत्ययात् भुजङ्गे रज्ज्वात्मकज्ञातस्वीयतत्त्वकत्वात्मकं रज्जुज्ञानेन तत्त्वतो ज्ञातत्वमक्षतमेव । एवं हि 'वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' (छां० ६।१।४) इति वाक्यशेषे प्रदर्शितो दृष्टान्तोऽप्यनुकूल एव स्यात् । स च मृद्विकारस्य घटशरावादेरनृततां बोधयति । वाचाया आरम्भणं-आलम्बनमात्रमेव विकारो घटशरावादिः, नामधेयं-नाममात्रं, न तु तस्य मृदः स्वकारणात् पृथग्भूता वस्तुसत्ताऽस्तीति द्योतयति 'नामधेय'पदम् । दृष्टञ्च नामपदस्याभासद्योतकत्वम्—'यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ।' (गी० १६।१७) इत्यत्र । घटादीनां मिथ्यात्वे घटः सन्नित्यादिव्यवहारस्तर्हि कथमुपपाद्यः स्यात् ? इत्यत आह-मृत्तिकेत्येव सत्यमिति । मृत्तिकात्मनैव घटादिकं सत्यं नतु स्वरूपेणेत्यभिप्रायः । अमुमर्थं दार्ष्टान्तिके दर्शयति-'एवं सोम्य ! स आदेशो भवती'ति ।

तदुपपादनायैव—'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम् ।' (छां० ६।२।१) इत्यभिहितम् । अनेन हि 'इदं'शब्दोदितस्य विश्वस्य सद्ब्रह्माभेदेन

सत्त्वमभिधायार्थात् सद्व्यतिरेकेणाविद्यकनामरूपात्मकस्य द्वैतस्य मिथ्यात्वं स्पष्टं प्रतिपाद्यते। 'एकमेवाद्वितीयम्' इत्यनेन भेदत्रयनिषेधद्वारा तदेव समर्थ्यते। एवं 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छां० ६।३।२) इत्यनेन मध्येऽपि जीवब्रह्मणोरभेद उक्तरीत्या निष्प्रपञ्चाद्वितीय ब्रह्मपरोपक्रमानुगुण एव परामृश्यते। एवं 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो!।' (छां० ६।१६।३) इत्युपसंहारोऽप्युपक्रमानुगुण एवोपलभ्यते। 'ऐतदात्म्यमिदं सर्व'मिति हि—'इदं सर्वं यदयमात्मा' (बृ० ४।५।७) इत्यादिश्रुत्यन्तरानुसारात् 'सदेव सोम्येदमग्र आसीत्' (छां० ६।२।१) इत्युपक्रमानुसाराच्च 'एतत्=सत्, आत्मा=अभिन्नं स्वरूपं अस्य सर्वस्य तदेतदात्म' इति बहुव्रीहिं कृत्वा ततो भावप्रत्यये कृते, भावप्रत्ययस्य प्रकारीभूतप्रकृत्यर्थपरत्वात्, बहुव्रीह्यर्थे विशेषणीभूतात्मपरामर्शकत्वेन 'एष आत्मेदं सर्वं' इति प्रतिपादयति। 'एष आत्मेदं सर्वं' इत्येव वक्तव्ये सामानाधिकरण्यमात्मात्मीयभावेनौपचारिकमिति शङ्कानिराकरणाय बहुव्रीहिभावप्रत्यययोरुपादानम्। तथा सति बहुव्रीहिणैव मुख्यया वृत्त्याऽऽत्मात्मीयभावे लब्धे पुनर्भावप्रत्ययरूपप्रयत्नान्तरकरणं व्यर्थं स्यादिति सा शङ्का निराकृता भवति। तच्च सामानाधिकरण्यं रजतं शुक्तिरिवारोपितबाधाभिप्रायेणैवाभ्युपेयम्। तन्निर्धारणार्थमस्ति—'तत्सत्य'मि'ति वाक्यम्। तत्र तच्छब्दः प्रकृतमात्मानं परामृशति; तस्यैव तात्पर्यविषयतयाऽस्मिन् संदर्भे प्राधान्यात्। 'स आत्मा' इति वाक्ये तस्यैव परामर्शेन तदैकार्थ्यानुसाराच्च। ततश्च तच्छब्देनाऽऽत्मानं परामृश्य तस्य विशिष्य सत्यताप्रतिपादनं—अनात्मनो द्वैतप्रपञ्चस्यानृततां बोधयत् पूर्वोपक्षिप्तं सामानाधिकरण्यं बाधायामेवेति व्यवस्थापयति। तस्मात् 'तत्त्वमसी'ति महावाक्यमपि स्वस्वारस्यानुसारेण यथाश्रुतं जीवब्रह्मणोरभेदार्थबोधकमेव साधु। विभक्तिलोपादिना क्लेशेन प्रकरणविरुद्धं भेदपरकं तद्व्याख्यानं न कथमपि संगतम्। न च सत्यार्थग्राहिणामपक्षपातधियां विदुषां प्रमोदावहम्। स्वस्वारस्यत्यागेन विभक्तिलोपाद्याश्रयणं द्वैतिनां व्यामोहमात्रमेव तत्राभिव्यनक्ति। अतदिति पदच्छेदस्तु एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधात् ब्रह्मजीवैक्यस्याप्रसक्तत्वेन निषेधानुपपत्तेश्चानुपपन्न एव विज्ञेयः। एतेन 'तस्य त्वं तत्त्वम्' इति समस्तं पदमित्यपि निरस्तम्। असमासेनैव षष्ठ्यर्थलक्षणादिरहितेन उपपत्तौ

षष्ठीसमासस्यान्याय्यत्वात्, अन्यथा पूर्वमीमांसास्थितस्थपत्यधिकरणविरोधापत्तेः। तत्र हि सम्बन्धिलक्षणापत्त्या निषादस्य सङ्करजातिविशेषस्य स्थपतिरीश्वरस्त्रैवर्णिक इति षष्ठीसमासमनादृत्य निषादाभिन्नस्थपतिरित्यर्थककर्मधारयसमास एवाभ्युपगतः इति।

नन्वस्तु तर्हि-'निरञ्जनः परमं साम्यमुपैति' (मु० उ० ३।१।३) 'मुक्तः शिवसमो भवेत्' इत्यादिश्रुतिस्मृतिभिर्जीवात्मनो ब्रह्मसदृशं मुक्तिदशायां प्रतिबन्धकनिवृत्तौ-अभिव्यक्तं उत्पद्यमानं वा रूपान्तरम्। तथा च तत्पदस्य तस्मिन् तत्सदृशे गौणी वृत्तिरभ्युपगम्यताम्। इत्थं च त्वं तत्=ब्रह्मसदृशोऽसीति महावाक्यार्थो भवतु पुरुषार्थपर्यवसायीति चेत्-नैवम्।

यतः। पूर्वोक्तश्रुतौ-पारम्यविशेषितस्य हि साम्यस्यात्यन्तिकाभेदार्थकत्वाभ्युपगमात्, त्वदुत्प्रेक्षितेऽभिव्यक्ते समुत्पद्यमाने च ब्रह्मसदृशे ब्रह्मभिन्ने रूपान्तरे श्रुत्यादिप्रमाणानामभावात् प्रत्युत 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता' (बृ० ३।७।२३) 'स एष इह प्रविष्टः' (बृ० १।४।७) 'नात्र काचन भिदाऽस्ति' (म० वा० र० ४) 'योऽन्यां देवतामुपास्ते न स वेद' (बृ० १।४।१०) 'आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति' इत्यादिश्रुतिस्मृतिसहस्रस्य तत्प्रतिषेधकत्वाच्च साम्यस्य भेदघटितः सादृश्यार्थः सर्वथाऽनुचित एव। अत एवाहुः शिष्टा महर्षयो ब्रह्मगीतासु—'सर्वाकारतया साम्यं परमाद्वैतलक्षणम्। अतः साम्यं तयोः साक्षात् ऐक्यमेव न चेतरत्॥' इति। न च 'साम्य'पदस्यैक्ये प्रयोगादर्शनात् साम्यं सादृश्यमेव स्यान्नैक्यमिति वाच्यम् 'ज्ञानसमकालमुक्तः' 'समसमयवर्ती' 'समानोदरे शयितः' 'समानं वृक्षं परिषस्वजाते' 'समानग्रामः' 'अनयोः समा जातिः' 'समानं कुलं' इत्यादिलौकिकवैदिकोदाहरणव्यवहारेषु च 'सम'शब्दस्य तत्पर्याय'समान'शब्दस्य चैक्य एव प्रयोगदर्शनात्, साम्यमिह ऐक्यमेव मन्तव्यम्, न सादृश्यम्।

अपि च त्वदुदाहृतश्रुतौ—'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय' (मुं० उ० ३।२।८) इति प्रागुपन्यस्तदृष्टान्तानुगुण्यात्, परमं साम्यमित्याऽऽत्यन्तिकाऽभेदद्योतकपरमपदस्वारस्यात् भेदप्रतिषेधकश्रुतिस्मृतिसहस्रानुरोधाच्च 'साम्य'पदस्य ऐक्यार्थकत्वे, स्मृतेस्तन्मूलिकायाः तत्समानार्थकत्वे च निश्चिते जीवात्मनां पृथक् पृथक् अनन्तकोटितादृशरूपा-

न्तरकल्पनं, आवरणोत्पत्त्यादिकल्पनं, सर्वशाखागतेष्वभ्यस्यमानेषु महावाक्येषु ब्रह्मबोधकपदस्य लक्ष्यमाणगुणसम्बन्धनिमित्तकजघन्यतमगौणीवृत्तिकल्पनं, त्वया कल्प्यमानस्य तत्सदृशरूपान्तरस्य मुक्तिकालोत्पत्तिकत्वेनोपदेशकालेऽविद्यमानतया वर्तमानार्थकलटोऽसङ्घटनात् लडादिव्यत्ययकल्पनञ्च श्रुतहान्यश्रुतकल्पनात्मकमहादोषवत्तया सर्वथाऽनुचितमेव पक्षपातवर्जितैः सुधीभिः प्रत्येतव्यम् ।

अपि च 'निर्दोषं हि समं ब्रह्म' (गी० ५।१९) 'पण्डिताः समदर्शिनः' (गी० ५।१८) इत्यादिगीतावचनेषु 'समं=सदृशं ब्रह्म, 'सदृशदर्शिनः' इत्यर्थौ न कथमपि संगततयाऽभ्युपेयते विद्वद्भिः । न च ब्रह्मणः कथञ्चित् केनचित् सादृश्यमस्ति । 'न तस्य प्रतिमा अस्ति' (श्वे० उ० ४।१९) इत्यादिना तत्प्रतिमायाः=सादृश्यस्य प्रतिषेधात् । न चैवं साम्यार्थे ऐक्येऽवधृते परमत्वविशेषणं प्रयोजनाभावात् व्यर्थं स्यादिति वाच्यम् । सौषुप्तिकसदैक्यव्यावृत्तिरूपस्य प्रयोजनस्य सद्भावेन तस्याव्यर्थत्वात् । तस्मात्-'परमं साम्यम्' इत्यत्र सर्वात्मनाऽखण्डैकरसाद्वैतपूर्णत्वलक्षणमैक्यमेव साम्यमिति सिद्धम् । अथवा 'सम'शब्दस्य सर्वपर्यायत्वोपगमात् साम्यमिह सर्वत्वलक्षणमप्यभ्युपेयताम् । 'यो वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति' (बृ० १।४।१०) 'ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाविशन्ति ।' (मुण्ड० ३।२।५) इत्यादिश्रुतेः । तत्रत्यं सर्वात्मभाववचनं हि विज्ञस्य ब्रह्मभावं विहाय न शक्यं सार्थकयितुम् । अतः सर्वत्वसहकृतं ब्रह्मत्वमप्युपेयते । स्मर्यते च भगवता वेदपुरुषेण गीतास्वपि—'मद्भावं सोऽधिगच्छति' (गी० १४।१९) 'स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति । (गी० ५।२४) इति । ज्ञानलभ्ये सर्वत्वरूपे साम्ये आपेक्षिकलक्षणं संकोचं व्यावर्तयितुं निरतिशयत्वञ्च विज्ञापयितुं परममिति विशेषणम् । तस्मात् श्रुत्यन्तरप्रतिपादितं ब्रह्मभावाविनाकृतं सर्वात्मभावलक्षणमेवात्र परमं साम्यमभ्युपेयम् । सत्येवं तत्सदृशस्त्वमसीति महावाक्यार्थवर्णनं परेषां प्रमादमूलतया सर्वथाऽसंगतमिति कृतधियः समालोचयन्तु । इति ।

अपि च—'तत्त्वमसी'त्यत्र तत्त्वंपदयोः सामानाधिकरण्यं तदभिन्नस्तदेव त्वमसीति मुख्यया वृत्त्या शक्त्यैवाभेदं बोधयति । विभक्तिलोपादिकल्पनया द्वैतवादिभिरुत्प्रेक्षितं तत्त्वंपदयोर्वैयधिकरण्यन्तु न मुख्यया वृत्त्या भेदं

प्रतिपादयति, किन्तु लक्षणया जन्यजनकनियन्तृनियम्यादिभात्रमेव प्रतिपादयति। स च भेदपूर्वक इति मत्वा तदन्यथाऽनुपपत्त्या तयोर्भेदमाक्षिपति। एवं हि अभेदस्य शाब्दत्वेन मुख्यत्वात् तस्यैव बलिष्ठत्वेन पारमार्थिकत्वम्। भेदस्य चार्थिकत्वेनामुख्यत्वात् कल्पितत्वमेवाभ्युपेयम्। न च 'तत्त्वमसी'त्यत्र स्वरसस्यानुसारेण सामानाधिकरण्यबोध्यं यथाश्रुतं जीवेशयोरैक्यं सार्वज्ञ्यासार्वज्ञ्यादिविरुद्धधर्माक्रान्तत्वादयोग्यतापराहतमिति वाच्यम्। 'सोऽयम्' इत्यादाविव जहदजहल्लक्षणया विरुद्धाकारत्यागेन शुद्धस्वरूपैक्यबोधनात् नायोग्यतापराहतमित्यलं पल्लवितेन, अधिकन्तु आकरे द्रष्टव्यम्।

## प्रतिबिम्बवादसमर्थनम्।

ननु-अष्टमे कूटस्थदीपप्रकरणे—'ईषद्भासनमाभासः प्रतिबिम्बस्तथाविधः। बिम्बलक्षणहीनः सन् बिम्बवद्भासते स हि॥' (८।३२) इत्यादिभिः—चिदात्मनः कूटस्थस्य रूपाकारशून्यस्य बुद्ध्यादौ प्रतिबिम्बात्मक आभासः स्वीकृतः। परन्तु स न संगतः, यतः प्रतिबिम्बो हि साकारस्य रूपवत एव साकारे रूपवत्येव परिपतति, दर्पणे मुखस्येव। तौ हि साकारावन्योऽन्यतः पृथक् चापि वर्तेते। अपृथग्भूतस्य प्रतिबिम्बो न सम्भवति। अतश्चिदात्मनो ब्रह्मणो निराकारत्वात् सर्वव्यापकत्वाच्च प्रतिबिम्बः सुतरामसंभवः। न च गभीरे निर्मले पयसि निराकारस्यापृथग्भूतस्य विभोर्नभसः प्रतिबिम्ब इव स्वच्छान्तःकरणे परमात्मन आभासो भविष्यतीति वाच्यम्। यतः—आकाशमस्त्यदृश्यमतस्तं न कोऽपि चक्षुषा वीक्षितुं प्रभवेत्। यश्चापि तत्र नीलिमा विलोक्यते, स नाकाशस्य, रूपरहितत्वात्तस्य। किन्तु अप्परमाणूनां बाहुल्यं नीलिमरूपेण विलोक्यते। यत्तत्र पांशुलत्वं दृश्यते, तत् पृथिवीतः समुड्डीय वायौ परिभ्रमन्तो रजःकणाः सन्ति, तेषामेवाम्भसि प्रतिबिम्बः, न त्वाकाशस्येति।

अत्र वदामः—अप्रयोजकं नियममुपेत्य—[1]'रूपं रूपं प्रतिरूपो बभूव'

---

1 रूप्यते-अहमिति धिया व्यवह्रियते आत्मा येनान्तःकरणेन तत् रूपम्, प्रतिरूपः=प्रतिबिम्बः, 'प्रतिबिम्ब'शब्दस्येव बिम्बस्वरूपार्थकरूपपदान्तकस्य 'प्रतिरूप'शब्दस्यापि प्रतिबिम्बार्थकत्वात्। अत एव पुरुषप्रतिबिम्बे 'पुरुषप्रतिरूपोऽयम्' इति प्रयोगदर्शनमप्युपपद्यते।

(ऋ० ६।४७।१८) 'यथा ह्ययं [1]ज्योतिरात्मा विवस्वान्, अपो भिन्ना बहुधैकोऽनुगच्छन्। उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा॥" "एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥" (ब्र० बि० उ० ११) 'आभास एव च' (ब्र० सू० २।३।५०) 'अत एव चोपमा सूर्यकादिवत्' (ब्र० सू० ३।२।१८) इत्यादिश्रुति-स्मृति-सूत्रप्रमाणैः स्वारस्यतः प्राप्तस्य प्रतिबिम्बभावस्य निराकरणानुपपत्तेः। वेदान्तदर्शने ब्रह्मसूत्रे हि—'अंशो नानाव्यपदेशात्' (२।३।४३) इत्यनेनोक्तं जीवस्य परमेश्वरांशत्वं—'प्रकाशादिवत्' (२।३।४६) इत्यनेनौपाधिकावच्छेदनिबन्धनं प्रतिपाद्य 'आभास एव च' (२।३।५०) इत्यनेन च बिम्बप्रतिबिम्बभावनिबन्धनं स्पष्टं प्रतिपाद्यते। अत एव जीवः परमात्मनः प्रतिबिम्बापरपर्याय आभास एव, न स एव साक्षात्, नापि वस्त्वन्तरम्। अतो यथा नैकस्मिन् सूर्यप्रतिबिम्बे कम्पमाने प्रतिबिम्बान्तरं कम्पते, एवं नैकस्मिन् जीवे कर्मफलसम्बन्धिनि सति जीवान्तरस्य तत्सम्बन्धः; आभासस्य चाविद्योपाधिकृतत्वात्, तदाश्रयस्य संसारस्याविद्याकृतत्वोपपत्तिरिति, तद्व्युदासेन च पारमार्थिकस्य ब्रह्मभावस्योपदेशोपपत्तिरिति।

यत्तूक्तं—'दर्पणे मुखस्येव साकारस्य रूपवत एव साकारे रूपवत्येव प्रतिबिम्बः परिपतति' इति। अत्रोच्यते—तत्र तावत् साकारस्य रूपवत एव प्रतिबिम्ब इति नास्ति नियमः। जपाकुसुमरूपस्य नीरूपस्य निराकारस्यापि स्फटिकादौ तथा रूपरहितस्यापि शब्दस्य प्रतिबिम्बदर्शनात्। किमङ्ग! शब्दोऽपि प्रतिबिम्बते? किं विमर्शेन? गिरिगुहागोपुरादिषु शब्दस्य प्रतिध्वनिरूपप्रतिबिम्बोपलम्भात्। अन्यथा प्रतिलोमं प्रतिभासानुपपत्तेः। प्रतिलोमवातेन प्रतिस्रोतःप्रवृत्तिकल्पनेऽपि शब्दस्य निःस्पर्शस्याभिघातायोगेन परावृत्त्यनियमात्, तथापि परागाहूतिवदुपलभ्येत। किन्तु नियमतः प्रतिबिम्बितः शब्दः प्रत्यगाहूतिवदुपलभ्यते। न च तादृशस्थले शब्दान्तरोत्पत्तिरेव, न तु शब्दप्रतिबिम्ब इति वाच्यम्; गिरिगुहादिशब्दप्रतिबिम्बप्रदेशे वर्णपदादिरूपशब्द-

---

१ ज्योतिरात्मा=ज्योतिःस्वरूपः, उपाधिना=जलरूपेण, भेदरूपः=भेदेन रूप्यते प्रतीयत इति भेदरूपः-भिन्न इति यावत्। देवः=परमात्मा, एवमुपाधिकृतापारमार्थिकभेदवान् भवति। क्षेत्रेषु=अविद्याऽन्तःकरणादिषु। ऐकधा-ईश्वररूपेण, बहुधा=जीवरूपेण।

जनकस्य कण्ठादिप्रदेशस्याभावेन वर्णात्मकशब्दजननासम्भवात्। अतो गिरिगुहाद्यवच्छेदेन प्रतीयमानस्य प्रतिशब्दस्य मूलशब्दत्वस्य शब्दान्तरत्वस्य चासम्भवात् तदवच्छेदेन प्रतीतिसिद्धये प्रतिबिम्बतैवाभ्युपगन्तव्या।

एवं नीरूपाया: संख्याया अपि प्रतिबिम्बो दृश्यते। अस्ति हि संख्यायामपि संख्या प्रतिबिम्बमाना। एकत्वं प्रथमसंख्या, द्वित्वं द्वितीयसंख्या, बहुत्वेषु त्रित्वं प्रथमसंख्या, चतुष्ट्वं द्वितीयसंख्येत्यादिव्यवहारात्। अत एव 'वसन्ताय कपिञ्जलानालभेत' इत्यत्र त्रित्वमेव बहुवचनार्थो, न तु चतुष्ट्वादिकं प्रथमातिक्रमे कारणाभावादिति मीमांसान्यायविदः। ननु-संख्यासु वस्तुतो नास्ति प्रतिबिम्बात्मकं संख्यान्तरं, किन्तु द्वित्वसंख्या द्वितीयेत्यादिसजातीयसंख्याव्यवहारमात्रम्, सत्ता सतीतिवदभेदेऽपि धर्मधर्मिभावकल्पना क्रियते, इति चेत्,- तर्हि तुल्यमेतदात्मनोऽपि, यतस्तत्रापि वस्तुतो नास्ति प्रतिबिम्बाख्यमात्मान्तरम्। किन्तु सजातीयव्यवहारनिबन्धना धर्मधर्मिभावकल्पनैव। धर्मी बिम्बाख्यः परमात्माऽस्ति, धर्मरूपाः प्रतिबिम्बकल्पाः सन्ति जीवात्मान इति-उपाधिभिः कल्प्यत इति। तस्मात् रूपवत एव प्रतिबिम्ब इति नियममवलम्ब्यात्मप्रतिबिम्बनिराकरणं तावदयुक्तम्। तथा रूपवत्येव साकारे प्रतिबिम्ब इति नियममवलम्ब्यापि निराकरणमयुक्तम्। तथाहि—किं प्रतिबिम्बोपाधेर्वस्तुतो रूपवत्त्वं प्रतिबिम्बने प्रयोजकमिष्यते, उत रूपवत्त्वेन ग्रहणम्? आद्ये-नात्मनोऽन्तःकरणेषु प्रतिबिम्बानुपपत्तिः। तेषां पञ्चीकरणेन रूपवत्त्वात् मध्यमपरिमाणाङ्गीकारेणाकारवत्त्वाच्च। न द्वितीयः; निजरूपवत्त्वेनागृह्यमाणेऽपि स्फटिके सन्निहितजपाकुसुमप्रतिबिम्बनेन 'अरुणः स्फटिकः' इति व्यवहारदर्शनात्। इति।

अपि च भो! त्वया गगनप्रतिबिम्बापलापोऽपि न कर्तुं शक्यते, यतः-यथा बहिः 'नीलं नभः' 'विशालं नभः' इत्यादिरूपेण गगनमनुभूयते। एवं कूपतडागादिजलेऽपि 'नीलं नभः' 'विशालं नभः'इत्यादिरूपोऽनुभवोऽस्ति सर्वसम्प्रतिपन्नः। कूपजलादौ च प्रतीयमानवैशाल्यादियुक्तं नभो वस्तुतो नास्ति, अतोऽमूर्तस्याप्याकाशस्य स्वाश्रिताभ्रनक्षत्रादिविशिष्टस्य जले प्रतिबिम्बभावदर्शनात् प्रतिबिम्बरूपमेव तत्र दृश्यमानं नभ इति वक्तव्यम्। न च जलान्तराकाशोऽभ्रादिप्रतिबिम्बाधारः स्यादिति वाच्यम्; जानुमात्रेऽपि जले दूरविशालाकाशदर्शनात्। सत्येवं कथं गगनप्रतिबिम्बापलापः क्रियते?। न च नीरूपस्य प्रतिबिम्बासम्भव इति वाच्यम्; शब्दसंख्यारूपादेर्नीरूपस्यापि प्रतिबिम्बदर्शनात्।

नच नीरूपस्य रूपशब्दादेर्गुणस्य प्रतिबिम्बसम्भवेऽपि नीरूपद्रव्यस्य प्रतिबिम्बो न कथमपि सम्भवतीति वाच्यम्; अस्मत्सिद्धान्ते द्रव्यगुणादिपरिभाषाया अनभ्युपगमात। तदभ्युपगमेऽपि गगनप्रतिबिम्बानुभवानुरोधेन रूपोपहितद्रव्यस्य प्रतिबिम्बः सम्भवत्येव। तदुपहितत्वञ्च वस्तुतः स्वगतरूपेण स्वस्मिन्नारोपितरूपेण वेत्यन्यदेतत्। तथा च बहिरारोपितनैल्यादिविशिष्टगगनस्य जलादौ प्रतिबिम्बाभ्युपगमेऽपि नास्ति किञ्चिद्बाधकम्।

अपि च—'पुरः पुरुष आविशत्' (बृ० २।५।१८) 'तदेवानुप्राविशत्' (तै० उ० २।६) 'स एष इह प्रविष्ट आनखाग्रेभ्यः' (बृ० १।४।७) 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत' (ऐ० ३।१२) इत्यादिश्रुतिभ्योऽवगम्यमानो व्यापिनो निराकारस्याविकृतस्यात्मनः प्रवेशः सर्पश्वसादिवत्, नाभ्युपेयोऽसम्भवात्, किन्तु अन्तःकरणादौ-अभिव्यक्तावभासलक्षणः प्रतिबिम्बभाव एव। यद्यपि प्रवेशबोधनमात्रेण नान्तःकरणे प्रतिबिम्बलाभः सम्भवति; अधिष्ठानतयाऽपि प्रवेशसम्भवात्। तथापि घटादावप्यधिष्ठानतया प्रवेशसम्भवात्—नखाग्रपर्यन्तप्रवेशस्यान्तःकरण एवोक्तेः प्रतिबिम्बत्वरूपान्तःकरणान्तर्गतत्वरूपप्रवेशविशेषतात्पर्यकत्वं विनाऽन्यथाऽनुपपन्नत्वरूपया श्रुतार्थापत्त्या तादृशप्रवेशबोधनं क्रियते।

यत्तूक्तं—आत्मन उपाधिभ्योऽपृथग्भूततया व्यवधानाभावात् प्रतिबिम्बानुपपत्तिरिति,—नैवम्; सर्वतः प्रसृतस्वितालोकादेरादर्शादौ, स्फटिकादौ चान्तर्गतयावकादेः प्रतिबिम्बदर्शनात्, वस्तुशक्तिवैचित्र्यप्रयुक्तवैषम्यस्यातर्क्यत्वाच्च। चाक्षुषप्रतिबिम्ब एव क्वचिद्व्यवधानापेक्षाऽस्ति, नान्यत्रेति-प्रागुदाहृतश्रुतिप्रमाणानन्यथासिद्धेः तादृशव्यवस्थाऽभ्युपगमाच्चोपाध्यन्तर्भावेन स्फुटावभासित्वलक्षणं प्रतिबिम्बनमात्मनोऽवलम्बामहे।

अपि च 'स्थितस्य गतिश्चिन्तनीया' इतिन्यायेन श्रुत्यादिप्रमाणावगतस्यात्मप्रतिबिम्बभावस्य सूर्याकाशादिदृष्टान्तसाम्यं विवक्षितांशमादाय कथञ्चित्प्रतिपादितमपि—नहि दृष्टदार्ष्टान्तयोः सर्वांशतः साम्यं तद्भावोच्छेदापातात् केनापि दर्शयितुं शक्यते। तदेतत्—ब्रह्मसूत्रमीमांसायां शङ्कासमाधानाभ्यां भगवन्तो **बादरायणाचार्या** अपि प्राहुः-'अम्बुवदग्रहणात्तु न तथात्वम्' (ब्र०सू० ३।२।१९) 'वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्।' (ब्र०सू० ३।२।२०) इति। व्याख्यातमेतद्भगवत्पादैः श्रीशङ्करस्वामिभिरपि—'न जलसूर्यकादितुल्यत्वमिहो-

प० २

पपद्यते, तद्वदग्रहणात्। सूर्यादिभ्यो हि मूर्तेभ्यः पृथग्भूतं विप्रकृष्टदेशं मूर्तं जलं गृह्यते, तत्र युक्तः सूर्यादिप्रतिबिम्बोदयः, नत्वात्मा मूर्तो, न चास्मात्पृथग्भूता विप्रकृष्टदेशाश्चोपाधयः, सर्वगतत्वात्सर्वानन्यत्वाच्च। तस्मादयुक्तोऽयं दृष्टान्त इति। अत्र प्रतिविधीयते-वृद्धयादीति। युक्त एव त्वयं दृष्टान्तो विवक्षितांशसम्भवात्। न हि दृष्टान्तदार्ष्टान्तिकयोः क्वचित्कञ्चिद्विवक्षितांशं मुक्त्वा सर्वसारूप्यं केनचिद्दर्शयितुं शक्यते। सर्वसारूप्ये हि दृष्टान्तदार्ष्टान्तिकभावोच्छेद एव स्यात्। न चेदं स्वमनीषया जलसूर्यकादिदृष्टान्तप्रणयनम्, शास्त्रप्रणीतस्य त्वस्य प्रयोजनमात्रमुपन्यस्यते। किं पुनरत्र विवक्षितं सारूप्यमिति? तदुच्यते-वृद्धिह्रासभाक्त्वमिति। जलगतं हि सूर्यप्रतिबिम्बं जलवृद्धौ वर्धते, जलह्रासे ह्रसति, जलचलने चलति, जलभेदे भिद्यते, इत्येवं जलधर्मानुयायि भवति। न तु परमार्थतः सूर्यस्य तथात्वमस्ति। एवं परमार्थतोऽविकृतमेकरूपमपि सद्ब्रह्म देहाद्युपाध्यन्तर्भावाद्भजत इवोपाधिधर्मान् वृद्धिह्रासादीन्। एवमुभयोर्दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यादविरोधः इति। तस्मात् पूज्यपादानां श्रीविद्यारण्यमुनीश्वराणामत्र चिदात्मनः प्रतिबिम्बापरपर्यायाभासप्रतिपादनं सुसंगतं, नैव कथमप्यसंगतमिति बोध्यम्।

## अनृतादपि सत्यप्रतिपत्त्युपपादनम्।

ननु-भोः! युष्मदाचार्यैः-'द्वैतमसन्मायामयत्वतः' (चित्रदीप० ६।४५) 'स्वप्नेन्द्रजालसदृशं' (तृप्तिदीप० ७।७१) इत्यादिभिर्वचनैः-चिदात्मभिन्नस्य सर्वस्य द्वैतप्रपञ्चस्य मिथ्यात्वं प्रतिपाद्यते। सत्येवं तदन्तर्गततयाऽद्वैतब्रह्मबोधसाधनानां शास्त्रगुर्वादीनामप्यनृतत्वात्-तैः कथं सत्यब्रह्मबोधः सम्भवेत्? न ह्यनृताया मातुः सकाशात् सत्यस्य पुत्रस्य जन्मलाभो दृष्ट इति चेत्,-मैवम्; प्रागद्वैतब्रह्मज्ञानात्-द्वैतप्रपञ्चस्य व्यावहारिकास्तित्वाभ्युपगमेन ब्रह्मबोधसाधनानां शास्त्रगुर्वादीनामपि सद्बुद्धिबोध्यत्वात् न तदा तेषामनृतत्वमवगम्यते। तथा च 'एकमेवाद्वितीयम्' (छां० ६।२।१) 'नेह नानास्ति किञ्चन' (बृ० ४।४।१९; क० उ० ४।११) इत्यादिकं प्रामाणिकं शास्त्रं पूर्वं प्रतिपाद्यप्रतिपादकभावरूपं शिष्यशासित्रादिभावरूपञ्च भेदं वस्तुतोऽसत्यमपि व्यावहारिकसत्यतया गृहीत्वा मुमुक्षून् सन्मार्गं प्रदर्शयितुं प्रवृत्ततया पश्चात् 'वेदा अवेदाः' (बृ० ४।३।२२) इति स्वमुखेनैव स्वस्यापि ब्रह्मभिन्नतयाऽसत्यत्वं प्रख्याप्याविद्याकल्पितकृत्स्नद्वैतप्रपञ्चनिरासपूर्वकं निर्विशेषं सच्चिद्घनमानन्दपूर्णं ब्रह्मा-

द्वयमेव बोधयति। अतस्तत्त्वज्ञानिना शास्त्रमपि ब्रह्माभिन्नतयाऽसत्यत्वेन भावनीयमेव, अन्यथा मनागपि द्वैतप्रतिभासेऽद्वैतभावना स्थिरा न स्यात्; ब्रह्माभिन्नतया समग्रस्य जगत इव शास्त्रादेर्भावनन्तु—इष्टापादनमेव। सत्येवं शास्त्रादेर्मोक्षद्वारपर्यन्तमेव गतिर्नत्वद्वयब्रह्मभावलक्षणमोक्षावस्थायाम्।

अपि च नैतदभिनिवेष्टव्यम्—यत्–मिथ्याभूतात्–साधनात्–सत्याधिगतिर्नैव भवतीति। यतः स्वप्ने घटादिविषयाणामसत्यत्वेऽपि तद्विषयकज्ञानस्य सत्यत्वदर्शनात्। यद्यपि स्वाप्नं ज्ञानं न तदा ज्ञानत्वेन केवलमस्ति, किन्तु तत्तन्मिथ्याविषयविशेषसहितस्य तज्ज्ञानस्य जाग्रदवस्थायामभावात् असत्यत्वमेवास्ति। तथापि मिथ्याभूतमपि तत् स्वाप्नं हस्त्यादिज्ञानं परमार्थशुभाशुभप्रतिपत्तेः कारणं भवतीति—अनृतात् सत्याधिगतेरवर्जनीयत्वमेव प्रत्येतव्यम्।

किञ्चानृतात्सत्यप्रतिपत्तेरिदमपरमुदाहरणम्। रेखारूपादनृतादक्षरात् सत्याक्षरप्रतिपत्तिर्या दृश्यते सा, यद्यपि रेखा सत्यैव, तथापि न सा रेखात्वेन केवला वर्णबुद्धिहेतुर्भवति; किन्तु वर्णात्मकतयैव, वर्णात्मकता तु रेखायामनुभूयमानाऽऽरोपिततयाऽनृतैव। 'अयं कवर्णोऽयं खवर्णः' इत्येवं रेखाविशेषे वर्णतादात्म्यमारोपितमनुभूयत एव सर्वैः, सर्पतादात्म्यमिव रज्ज्वाम्। एवं रेखातादात्म्येऽनारोपितानां वर्णानामस्ति सत्यार्थबोधकत्वम्। न च रेखास्मारिता वर्णा एव सत्याः सन्तु सत्यार्थसाधका इति वाच्यम्; आशैशवं ककारोऽयं गकार इत्यनुभवात् अभेदेनैव स्मरणात्, विवेके सत्यपि दृढतरसंस्कारवशात् नारोपनिवृत्तिर्भवति। अत एव 'ककारं पठति लिखति च' इति सार्वलौकिको व्यवहारो नापलपितुं शक्य इति। एवं मिथ्याभूतस्य मायाकल्पितव्याघ्रादेः, रज्जुसर्पादेश्च सत्यभयादिहेतुत्वं, सवितृसुषिरस्य च सत्यमरणसूचकत्वं शङ्काविषस्य च सत्यमरणहेतुत्वमित्यादीनि सन्ति भूयांस्युदाहरणानि—अनृतात्सत्यप्रतिपत्तिविषये इति।

## शास्त्रादिप्रामाण्यप्रतिपादनम्।

एतेन शास्त्रादीनामनृततया कदाचिदपि प्रामाण्यमेव न स्यादिति परास्तम्। तत्त्वज्ञानसिद्धेः पूर्वं व्यवहारदशायां बाधाभावात् तेषां प्रामाण्यस्याभ्युपगमात्। यदाहुः—'लौकिकं वैदिकं तद्वत् प्रमाणं त्वाऽऽत्मनिश्चयात्।' इति। अद्वैतात्मसाक्षात्कारपर्यन्तमेव सकलं प्रमाणजातमनुवर्तते, जाते तु तत्साक्षात्कारे बाधितं सद्विनिवर्तते इति यावत्। तथा च प्राक् तत्त्वावबोधात् सर्वेषां प्रमाणानामविद्यावद्विषयत्वेन तद्दशायां बाधाभावात् निष्प्रत्यूहं प्रामाण्यमवतिष्ठते

एव, तत्त्वज्ञानादूर्ध्वं तु प्रामाण्यस्य बाधिततयाऽनृतत्वापादानन्निवर्णापत्तिपराहतमेव वेदितव्यम् ।

यदभिप्रेत्य श्रीमद्भागवते वेदस्तुतौ श्रीमद्बादरायणाचार्या अप्यूचुः— 'यच्छ्रुतयस्त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः' (१०।८७।४१) इति । अयमर्थः—हि-यस्मात् एवमतः श्रुतयस्त्वयि=अवाङ्मनसगोचरे निर्विशेषे प्रत्यगभिन्ने ब्रह्मणि, अतन्निरसनेन=तत्—आत्मतत्त्वं, अतत्—तद्भिन्नं मिथ्याभूतं जगत्, तस्य—'नेह नानास्ति किञ्चन' (बृ० ४।४।१९) 'अस्थूलमनणु' (बृ० ३।८।८) 'अशब्दमस्पर्शमरूपम्' (कठ० १।३।१५) इत्यादिना निरसनेन—बाधेन फलन्ति=तात्पर्यवृत्त्या पर्यवस्यन्ति । यतस्ताः श्रुतयो भवन्निधनाः सन्ति ; भवति-त्वयि, यद्वा भातीति भवान्—चिज्ज्योतिःस्वरूपः, तत्र त्वयि सर्वानन्येऽखण्डैकरसे निधनं=समाप्तिर्यासां तास्तथा । निरवधिकासाक्षिकनिषेधादर्शनात्तदवधिभूतं सच्चिद्घनं पूर्णाद्वैतं त्वामेव बोधयित्वा मुमुक्षून् प्रत्यभेदेन साक्षात्कारयित्वा समाप्तकर्तव्याः—निवृत्तव्यापारा भवन्ति । यद्वा भवन्निधनाः=भवतीति भवन्—वर्तमानं प्राप्त निधनं—मरणं यासां ता इत्यर्थः । एवंभूताः प्रमाणशिरोमणयः श्रुतयस्त्वदतिरिक्तसर्वनिषेधेन त्वामेवैकं सच्चिन्मात्रमवशेषयन्ति—तदवस्थायां स्वनिषेधोऽप्यर्थात् ज्ञापयन्ति—अन्यथा तदेकावशेषज्ञापनासम्भवापातात् इति ।

तस्माच्छास्त्रादेर्वस्तुतो मिथ्यात्वेऽपि-अर्थावबोधकतया भ्रमादिदोषरहिततयाऽद्वैततत्त्वप्रतिपत्तेः प्राक् अबाधितया च चक्षुरादिवत् प्रमाणान्तरेणानधिगतेऽद्वैतब्रह्मात्मवस्तुनि प्रामाण्यं भवत्येव ।

## अद्वैतमेव सत्यं शिवं सुन्दरम् ।

अत एव—अनन्यलभ्यत्वात्—अबाधितत्वात्—दोषानास्पदत्वात्—सप्रयोजनत्वाच्चौपनिषदाद्वैतदर्शनमेव सत्यं शिवं सुन्दरं शिष्टा मन्वते । अत एवाद्वैतामृतवर्षिणी भगवद्गीताऽपि—अद्वैतस्यैव केवलस्यामृतत्वं निरतिशयसुखसमर्पकतया— 'अयं पुमान् वामेनाक्ष्णा पश्यतीत्यस्यार्थात्तदितरेण न पश्यत्यतोऽयं काणोऽविश्वसनीय इव'—अर्थतो विषत्वं द्वैतस्य प्रभूतदुःखभयादिप्रयोजकतया च ब्रुवाणा केवलमद्वैतमेव श्रद्धेयं, नेतरदिति ब्रवीति ।

अत एव तत्रैवाष्टादशे विंशतितमश्लोके वेदपुरुषो भगवाननतिधन्योऽच्युतः— 'येन ज्ञानेन सर्वभूतेषु—अविद्यया विभक्ततया प्रतिभासमानेषु—एकं—अद्वितीयं

अविभक्तं-त्रिविधपरिच्छेदरहितं भावं-सर्वाधिष्ठानमात्मवस्तु पश्यति, एतादृशाद्वैतात्मतत्त्वज्ञानमेव सात्त्विकं मन्तव्यम्, तदेव परया श्रद्धया समुपादेयं, तस्यैव समादरेण निष्ठा संपादनीया नान्यस्य। त्रिविधाहारादीनां मध्ये सात्त्विक-आहारादिरेव यथा प्रशस्ततया कल्याणसाधकतया च विहायाप्रशस्ताननर्थप्रयोजकान् राजसतामसाहारादीन्-समुपादीयते कल्याणकामिभिः; तथैव सत्यं शिवं सुन्दरं सात्त्विकं केवलाद्वैतज्ञानमेव-परित्यज्यानृताशिवासुन्दरे राजसतामसद्वैतादिज्ञाने दूरतो 'ऊर्ध्वं गच्छन्ति सत्त्वस्थाः' (गी० १४।१८) इति न्यायेन सात्त्विकसाधनस्यैव- ऊर्ध्वमूलात्मकब्रह्मावाप्तिकारणतासूचकेन-समादरणीयं--प्रशस्तमतिभिः इति--प्रतिपादयन्ति।

## निखिलोपनिषदां केवलाद्वैत एव सर्वथा पर्यवसानम्।

एवं वैष्णवप्रिये पुराणमूर्धन्ये निगमकल्पतरुगलितफलोपमे श्रीमद्भागवते-प्रथमे-'वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्।' (१।२।११) इत्यनेन केवलमद्वयब्रह्मज्ञानमेव समस्तशास्त्रप्रतिपाद्यं सारभूतं सत्यतत्त्वं तदितरत् द्वयज्ञानमसारं तुच्छं; चतुर्थे च—'अहं भवान्न चान्यस्त्वं त्वमेवाहं विचक्ष्व भोः!।' (४।२९।६३) इत्यनेन व्यतिहारोपदेशेन पारमार्थिकं जीवब्रह्मणोरैक्यं; दशमे पूर्वार्धे च-'तस्मादिदं जगदशेषमसत्स्वरूपं स्वप्नाभम्' (१०।१४।२२) इत्यनेन-ब्रह्मभिन्नस्य सर्वस्य द्वैतप्रपञ्चस्य मिथ्यात्वञ्च स्पष्टं प्रतिपादयन्; एकादशे च 'सर्वभूतेषु यः पश्येद् भगवद्भावमात्मनः। भूतानि भगवत्यात्मन्येष भागवतोत्तमः॥' (११।२।४५) इत्यनेन-केवलाद्वैततत्त्वदर्शिन एव वैष्णवोत्तमत्वञ्च वर्णयन्, उपसंहारात्मके द्वादशे च—'सर्ववेदान्तसारं यद्ब्रह्मात्मैकत्वलक्षणम्। वस्तु अद्वितीयं तन्निष्ठं कैवल्यैकप्रयोजनम्॥' (१२।१३।१२) इत्यनेन च श्रद्धेयस्य स्तुत्यस्य केवलाद्वैतसिद्धान्तस्यैव परिनिष्ठया ब्रह्मकैवल्यात्मकं परमं प्रयोजनं सिद्ध्यतीति निरूपयन् श्रीमद्भागवतप्रणेता भगवान् बादरायणाचार्यो-'इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत्।' इतिन्यायेन वेदान्तापरपर्यायाणां सर्वासामुपनिषदां-केवलाद्वैत एवास्ति परमं तात्पर्यमिति विज्ञापयति।

## निखिलवेदान्तसारभूतपञ्चदशीग्रन्थस्यास्य वैशिष्ट्यम्।

अत एव संक्षिप्ततया सरलतया विशदयुक्तिभिश्च निखिलश्रुतिस्मृतिपुराणप्रतिपादितकेवलाद्वैतसिद्धान्तवर्णनतत्परस्यास्यातिधन्यस्य पञ्चदशीग्रन्थस्य प्रमेयबहुलस्य सुबोधसमर्पकस्य मुमुक्षुजनमनोहरस्य सद्ग्रन्थस्य सदृशो वेदान्त-

जगति नास्ति द्वितीयो ग्रन्थ इति विदुषां कथनं यथार्थमेव सिद्ध्यति, न लेशतोऽप्यत्युक्तितां समर्थयति । अत एवास्य प्रणयनं कृत्वा श्रीपूज्यविद्यारण्यमुनीश्वरेण वेदान्ततत्त्वजिज्ञासून् प्रति-अवर्णनीयो महान्-उपकारो व्यधायीत्यत्र नास्ति कस्यचिद्विसंवादगन्धोऽपि ।

## एतद्ग्रन्थकृतां श्रीमद्विद्यारण्यमुनीनां स्थलकालादिविवेकः ।

भूमिकायां हि-अयं ग्रन्थकारः किंवृत्तः, कुत्रत्यः, कदा किमर्थं ग्रन्थमिमं प्रणिनाय, अस्य च कः संक्षिप्तो विषयः, कैश्च ग्रन्थान्तरैरस्योपजीवकत्वम्. अनेनान्येऽपि के के ग्रन्था निर्मिताः इत्यादयो बहवोऽर्थाः प्रदर्शनीयाः इत्यस्ति काचनाद्यत्वे प्रचलिता परिपाटी । तामनुसृत्य तद्विषये किमपि यथाशक्यं संक्षेपतो लिखामः ।

## श्रीमद्विद्यारण्यमुनीनां पूर्वाश्रमपरिचयः ।

श्रीमत्परमहंसपरिव्राजकाचार्यः पूज्यपादः श्रीविद्यारण्यमुनीश्वरः पूर्वाश्रमे माधवाचार्यनामा आसीत् । तस्य पितुः श्रीमायणः, मातुश्च श्रीमती नामनी आस्ताम् । वेदभाष्यकारः सायणाचार्यो भोगनाथश्चास्य सहोदरौ अभूताम् । **पराशरमाधव**ग्रन्थस्य प्रारम्भश्लोकेऽनेन स्वकीय ईदृशः परिचयो दत्तः ।

श्रीमती जननी यस्य सुकीर्तिर्मायणः पिता ।
सायणो भोगनाथश्च मनोबुद्धी सहोदरौ ॥
बौधायनं यस्य सूत्रं, शाखा यस्य च याजुषी ।
भारद्वाजं यस्य गोत्रं, सर्वज्ञः स हि माधवः ॥ इति ।
'श्रीमत्सायणदुग्धाब्धेः कौस्तुभेन महौजसा ।
क्रियते माधवार्येण सर्वदर्शनसंग्रहः ॥
पूर्वेषामतिदुस्तराणि सुतरामालोच्य शास्त्राण्यसौ ।
श्रीमत्सायणमाधवः प्रभुरुपन्यासत् सतां प्रीतये ॥'

इत्याभ्यां **सर्वदर्शनसंग्रह**नामकग्रन्थस्य प्रारम्भश्लोकाभ्यां विज्ञायते-यत् माधवाचार्यस्य कुलनाम रामराघववत् 'सायणः' इत्यासीदिति । सत्येवं सायणरूपस्य क्षीरसागरस्य कौस्तुभमणिरूपेण 'सायणमाधवः' इत्युल्लेखेन च स्वस्य वर्णनमत्र संगच्छते । अत एव **माधवीयधातुवृत्ति**नामकस्य ग्रन्थस्य-'अस्ति श्रीसङ्गमक्ष्मापः पृथ्वीतलपुरन्दरः । तस्य मन्त्रिशिखारत्नमस्ति मायणसायणः ॥'

इत्यस्मिन् प्रारम्भश्लोकेऽयं निजपितृचरणं श्रीमायणमपि सायणोपाधिनाऽलं-कुर्वन् स्वस्य 'सायण' इति कुलनाम एवास्तीति स्पष्टमस्मान् विनिश्चाययति।

अत एव—चतुर्वेदभाष्यकारो महामनीषी सायणाचार्यस्तदनुजो निजकुल-नाम्नैव प्रसिद्ध आसीत् न स्वनाम्ना। तैत्तिरीयसंहिताभाष्यस्य प्रारम्भ-श्लोकपर्यालोचनयाऽपि तथैवावगमात्। तथाहि—'अन्वशात् माधवाचार्यं वेदार्थस्य प्रकाशने। स प्राह नृपतिं राजन्! सायणार्यो ममानुजः। सर्वं वेत्त्येष वेदानां व्याख्यातृत्वे नियुज्यताम्॥ इत्युक्तो माधवार्येण वीरबुक्कमही-पतिः। अन्वशात् सायणाचार्यं वेदार्थस्य प्रकाशने॥' इति। अत एव यत्र कुत्र-चित् 'सायणमाधवीये' 'सायणाचार्यविरचिते माधवीये' इत्येवमुल्लेखो दृश्यते, तत्र सर्वत्र 'माधवाचार्यस्य स्वज्येष्ठभ्रातुराज्ञया सायणद्वारा विरचिते' इत्य-स्यार्थस्य युक्तत्वं वयं प्रतीमः।

प्राक् माधवाचार्यस्य पश्चात् विद्यारण्यस्वामिनः–'अद्वैतसिद्ध्यादिप्रणेतुः श्रीमधुसूदनस्वामिनः 'श्रीरामविश्वेश्वरमाधवानामैक्येन साक्षात्कृतमाधवानाम्' इति स्ववचनावगतास्त्रयो गुरवो यथाऽऽसन्–तथैव–स्वप्रणीतविवरणप्रमेयसंग्रह-जैमिनीयन्यायमालाप्रभृतिग्रन्थानामवलोकनेन–श्रीशङ्करानन्द-श्रीविद्यातीर्थ-श्रीभारतीतीर्थनामालङ्कृतास्त्रयो महानुभावाः परिव्राजकाचार्या गुरव आसन् इति स्पष्टमवगम्यते। तथाहि–विवरणप्रमेयसंग्रहनामकग्रन्थस्य प्रारम्भश्लोके–'स्वमात्रयानन्दयदत्र जन्तून् सर्वात्मभावेन तथा परत्र। यच्छङ्करानन्दपदं हृदब्जे विभ्राजते तद् यतयो विशन्ति॥' इत्यस्मिन्, एवमस्य पञ्चदशी-ग्रन्थस्य प्रारम्भश्लोकेऽपि च–'नमः श्रीशङ्करानन्दगुरुपादाम्बुजन्मने।' इत्यस्मिन्, अयं श्रीशङ्करानन्दगुरुं परया श्रद्धया सस्मार प्रणनाम च। एवं विवरण-प्रमेयसंग्रहस्य समाप्तौ–'यद्विद्यातीर्थगुरवे शुश्रूषाऽन्या न रोचते तस्मात्। अस्त्वेषा भक्तियुता श्रीविद्यातीर्थपादयोः सेवा॥' इत्यनेन सेवामिषेण स्व-प्रणीतं ग्रन्थं समर्पयता विद्यारण्यमुनिना श्रीविद्यातीर्थनामाङ्कितो द्वितीयो गुरुः प्रादर्शि। अस्मा एव श्रीविद्यातीर्थगुरवे-सायणाचार्येणापि वेदभाष्यस्य प्रारम्भे नमस्कारः समर्पितः। एवं वैयासिकन्यायमालायां भारतीतीर्थोऽपि इममेव स्वगुरुरूपेण सस्मार। सत्येवं माधवाचार्य-सायणाचार्य-भारतीतीर्थानां त्रयाणा-मपि समानो विद्यातीर्थो गुरुरासीत्—इति ज्ञायते।

एवं जैमिनीयन्यायमालायामवस्थितेन–'स भव्याद् भारतीतीर्थयतीन्द्र-

चतुराननात्। कृपामव्याहतां लब्ध्वा परार्घ्यप्रतिमोऽभवत ॥' इत्यनेन पद्येन भारतीतीर्थसंज्ञकं तृतीयं गुरुमव्याहतकृपासमर्पकतयाऽभितुष्टाव। अथापि श्रीविद्यारण्यमुनीश्वरस्य प्राक् विद्यातीर्थगुरुर्विद्यासमर्पक आसीत्, तद्देहावसानानन्तरं स विद्यातीर्थशिष्यस्य भारतीतीर्थस्य सविधे परिशिष्टां विद्यां जग्राह। एवं वार्धक्ये वैराग्योद्रेके सति श्रीशङ्करानन्दस्वामिनः सकाशात् संन्यासदीक्षां लब्धवान्। तथा च तस्य पूर्वोक्तव्यवस्थया गुरुत्रयसद्भावे न कामपि विप्रतिपत्तिं पश्यामः।

ननु—'प्रागवस्थो माधवाचार्य एव तुरीयावस्थः श्रीविद्यारण्यमुनीश्वरोऽभवत्' इत्यत्र किमस्ति मानमिति चेत्—कुत्रचित् मम दृष्ट्या प्रत्यक्षवचनोल्लेखाभावेऽपि शिष्टपरम्परोपश्रुतिरेव तत्र प्रमाणमिति गृहाण। अत एव किष्किन्धायां प्रवाहितमध्यतुंगभद्रानद्यां हाम्पीसंज्ञके स्थाने विरूपाक्षमहादेवालये विद्यारण्यमुनीश्वरस्य पाषाणमूर्तिः, तच्चरितपाषाणचित्राणि परम्परागत आचार्यपीठोऽपि चाद्यत्वेऽपि दृग्विषयतां प्रयाति। तत्सविध एव नातिदूरे विजयनगरराजधानी संप्रत्यपि भग्नावशेषाऽवलोक्यते। यस्याः संस्थापकः श्रीमाधवाचार्य आसीत्। त्रयोदशशताब्द्यां विजयनगरराज्यसिंहासने वीरबुक्कसंज्ञकं भूपतिमभिषिच्य स्वयं स तस्य प्रधानमन्त्रिपदमप्यलञ्चकारेति—इतिहासविदो वदन्ति।

## एतद्ग्रन्थकृत्प्रणीता अन्ये ग्रन्थाः।

अत एव तस्मिन्—सर्वोच्चकोटिकं राजनीतिज्ञत्वप्रबन्धपटुत्वादिकमप्यवर्णलभ्यमधिगम्यते। तेन साकं व्याकरणसाहित्यदर्शनवेदान्तादिनिखिलशास्त्रेष्वपि तस्य सर्वतोमुखी प्रतिभा तत्प्रणीतग्रन्थावलोकनेनावलोक्यते। अत एव तद्विरचितग्रन्थानां संक्षिप्तः परिचयोऽत्र दीयते। व्याकरणे 'माधवीयधातुवृत्तिः', मीमांसायां 'जैमिनीयन्यायमाला', स्मृतिषु—पराशरसंहितामवलम्ब्य 'पराशरमाधव'नामकः 'कालमाधव'संज्ञकश्च निबन्धौ, दर्शनेषु—'सर्वदर्शनसंग्रहः', काव्येषु 'शङ्करदिग्विजयः', पुराणेषु—स्कन्दपुराणान्तर्गतसूतसंहिताया अद्वैततत्त्वप्रकटनपटीयसी विशदटीका, वेदान्तेषु च 'विवरणप्रमेयसंग्रहः', 'बृहदारण्यकवार्तिकसारः' 'पञ्चदशी' 'जीवन्मुक्तिविवेकः' 'अनुभूतिप्रकाशः' 'अपरोक्षानुभूतिटीका' 'ऐतरेयोपनिषद्दीपिका' 'तैत्तिरीयोपनिषद्दीपिका' 'छान्दोग्योपनिषद्दीपिका' च प्रणीताः सन्ति। तथा च तस्मिन् महत्यात्मनि युगपत् कवित्वदार्शनिकत्वराजनीतिज्ञत्वतत्त्वनिष्ठत्वमहासंग्रहित्वपूर्णत्यागित्वा-

दयो मिथो विरुद्धा अपि सहचरिता बहवः प्रशंसनीया गुणा अवगम्यन्ते। यथैव स विशालराज्यस्य सफलः संस्थापकः परिचालकश्चासीत्, तथैव संन्यासिमण्डलस्याग्रेसरः पूज्यतमो विश्ववन्दनीयश्चाभूत्। संन्यासं गृहीत्वा दक्षिणदिगवस्थितसुप्रसिद्धशृङ्गेरीमठस्य शङ्कराचार्यपीठेऽप्ययमवस्थितो बभूव। शतसंवत्सरेभ्योऽप्यधिकमायुर्लब्ध्वा स्तुत्यां जीवनयात्रां समाप्य चायं ब्रह्मनिर्वाणं लब्धवान् इति।

## टीकाकृतां परिचयः।

अस्य श्रीरामकृष्णप्रणीता संस्कृतटीकाऽपि मूलार्थावबोधने पटीयसी सरला च विद्यार्थिनामतीवोपयुक्ता। अयं टीकाकारः श्रीरामकृष्णो विद्वान् श्रीभारतीतीर्थविद्यारण्यमुनीश्वराभ्यां पौनःपुन्येन तत्तत्प्रकरणादौ नमस्कुर्वाणः, गृहस्थो वा ब्रह्मचारी वा परिव्राड् वा कोऽयमासीत्, कुत्रत्यः, इत्यादिकं तदीयं वृत्तं न ज्ञायते, परन्त्वसौ प्रणम्यस्य मुनिद्वयस्य कश्चन श्रद्धालुः शिष्यः सुचरितोऽद्वैतसिद्धान्तप्रणयी विद्वानासीदित्येतावन्मात्रमवगम्यते। यद्यपि 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः।' (मु० उ० २।२।५) इति श्रुत्यादेशात् वेदान्ततत्त्वजिज्ञासूनां प्रत्यगभिन्नब्रह्मानुसन्धानपरायणानां कृते तत्तदीयानात्मवृत्तान्तावबोधो निरर्थक एव प्रतिभाति, तथापि व्यावहारिकदृष्टिमवलम्ब्य तद्ग्रन्थप्रणेतृमहत्त्वं द्योतयितुं-तत्रान्येषामपि श्रद्धां जनयितुं तत्कथनं नानुपयुक्तमिति।

## प्रस्तुतसंस्करणस्याभिनवत्वम्।

प्राक् निर्णयसागरमुद्रणालयेऽयं पञ्चदशीग्रन्थो लघ्वाकारेण सूक्ष्माक्षरैश्च विषयानुक्रमणिका-श्लोकाद्यचरणप्रतीकानुक्रमणिकारहितो मुद्रित आसीत्। तत्राध्येतॄणां सूक्ष्माक्षरानुक्रमणिकाऽभावप्रयुक्तपठनकष्टं निरसितुं संप्रति बृहदाकारेण बृहदक्षरैश्चायं मुद्र्यमाणो द्विविधानुक्रमणिका-श्रुतिकोशाद्युपेतश्च तेषामवश्यं प्रमोदं जनयिष्यतीति विश्वसिमः।

तत्रापि श्रीमता निर्णयसागरमुद्रणयन्त्रालयस्य प्रधानपण्डितमहोदयेन **श्रीनारायणरामाचार्येण** विषमस्थलेषु विशदा टिप्पणी विहिता, पाठभेदादिकमपि प्रदर्शितम्। तस्यैतादृशः परिश्रमः सर्वथा स्तुत्यो धन्यवादार्हश्च पाठकान् सन्तोषयिष्यत्येवेति मन्महे।

## उपसंहारः।

तच्छुभप्रेरणयैव यथामति लिखितयाऽनया भूमिकया यत्किमपि केवलाद्वैतराद्धान्ताक्षेपप्रतिक्षेपकं समाधानमधिगत्य तत्प्रणयिनोऽध्येतारः प्रमोदयिष्यन्तीति मे दृढो विश्वासः। प्रकरणिनो वेदान्तशास्त्रस्य योऽयं 'ब्रह्म सत्यं जगन्मिथ्या, जीवो ब्रह्मैव केवलम्' इति सुप्रसिद्धो विषयः, स एव तत्प्रकरणात्मकस्यास्य ग्रन्थस्य प्रत्येतव्यो नान्यः। प्रयोजनादिकमपि तदेव। ईशावास्याद्या उपनिषद एव वेदान्ता एतद्ग्रन्थोपजीव्यतां भजन्ते। अत एव तासामेव सयुक्तिकस्तत्त्वनिर्णायको विचारोऽत्र प्रस्तुतोऽवलोक्यते। 'स्वयं तीर्णः परान् तारयति' इतिन्यायेन स्वप्रयोजनाभावेऽपि जीवन्मुक्तस्य कृतकृत्यस्याचार्यस्य जिज्ञासुजननिवहोद्धारप्रणयशालिनी तरुणा करुणैव एतत्प्रणयने बीजभावं प्रतिपद्यते। अन्ते चेदं वाचकेभ्यो नैष्कर्म्यसिद्धिस्थं—विशिष्टगुरुसम्प्रदायलब्धस्य प्रकरणग्रन्थस्य प्रणयने परानुग्रह एव प्रयोजनं नान्यदित्यस्यार्थस्य ज्ञापकं—

'विष्णोः पादानुगां यां निखिलभवनुदं शंकरोऽवाप योगात्,
सर्वज्ञं ब्रह्मसंस्थं मुनिगणसहितं सम्यगभ्यर्च्य भक्त्या।
विद्यां गङ्गामिवाहं प्रवरगुणनिधेः प्राप्य वेदान्तदीप्तां,
कारुण्यात्तामवोचं जनिमृतिनिवहध्वस्तये दुःखितेभ्यः॥

इति मनोरमं पद्यं समर्प्य शं भजामि—

ता. ४।९।४९
विक्रमसंवत् २००६
भाद्रपदशुक्लद्वादशी
रविवासरः
वामनजयन्ती

स्वामी महेश्वरानन्दो मण्डलेश्वरः
संन्यासाश्रमः, विठ्ठलभाई पटेल रोड,
(पश्चिम) विलेपारला, बम्बई नं. २४

# विषयानुक्रमणिका



## प्रथमं तत्त्वविवेकप्रकरणम्

## पञ्चमं महावाक्यविवेकप्रकरणम् १०३



## षष्ठं चित्रदीपप्रकरणम् १०७

## सप्तमं तृप्तिदीपप्रकरणम् १८८

## दशमं नाटकदीपप्रकरणम्



## एकादशं योगानन्दप्रकरणम्

## द्वादशं आत्मानन्दप्रकरणम्



## त्रयोदशमद्वैतानन्दप्रकरणम्

## चतुर्दशं विद्यानन्दप्रकरणम्



## पञ्चदशं विषयानन्दप्रकरणम्



संपूर्णेयं विषयानुक्रमणिका ।

# अत्रोपयुक्तसांकेतिकचिह्नानां परिचयः

अ० = अध्यायः

अनु० = अनुवाकः

अथर्व० = अथर्वशिखोपनिषत्

अमृ०<br>अमृ० बि० } = अमृतबिन्दूपनिषत्

आत्मबोध० = आत्मबोधोपनिषत्

ऋ० सं० = ऋग्वेदसंहिता

ऐ०<br>ऐत० } = ऐतरेयोपनिषत्

कठ० = कठोपनिषत्

कालाग्नि० = कालाग्निरुद्रोपनिषत्

केनोप० = केनोपनिषत्

कै०<br>कैवल्य० } = कैवल्योपनिषत्

कौषी० = कौषीतक्युपनिषत्

गी० = भगवद्गीता

गौड० = गौडपादकारिकाः

छा० = छान्दोग्योपनिषत्

टिप्प० = टिप्पण्यः

तै०<br>तैत्ति० } = तैत्तिरीयोपनिषत्

ना० प० = नारदपरिव्राजकोपनिषत्

नृ० उ० ता० = नृसिंहोत्तरतापनीयोपनिषत्
नृ० पू० ता० = नृसिंहपूर्वतापनीयोपनिषत्
पराशरपु० = पराशरपुराणम्
पाठा०=पाठान्तराणि
पा० शि० = पाणिनीया शिक्षा
प्र० = प्रकरणम् ( पञ्चदश्याः )
प्रश्नो० = प्रश्नोपनिषत्
ब्र० सू० = ब्रह्मसूत्रभाष्यम्
माण्डू० = माण्डूक्योपनिषत्
मुण्ड०
मु० } =मुण्डकोपनिषत्
मैत्रा० = मैत्रायणीयोपनिषत्
यो० सू० = योगसूत्रम् ( पतञ्जलिप्रणीतम् )
शाट्या० = शाट्यायनीयोपनिषत्
सुबालो० = सुबालोपनिषत्
हंसो० = हंसोपनिषत्



